कुलालकः स सद्योऽभूत् तस्य नित्यं विनश्यति ।
चान्द्रायणत्रयं कृत्वा शुद्धिमाप्नोति दैहिकीम् ॥
पुनः संस्कारपूतात्मा कुर्य्याद्यागादिकं पुनः ।
अन्यथा दोषमाप्नोति पुत्रहीनोऽपि जायते ॥

इति हेमाद्रौ गजप्रतिग्रहप्रायश्चित्तम् ।

---

अथेदानीं श्वेताश्वप्रतिग्रहप्रायश्चित्तमाह ।

कूर्मपुराणे,—

पुरा दुर्व्वाससः शापाद्धृतैश्वर्य्यः पुरन्दरः ।
तदर्थं मथितः[1] सिन्धुर्दिविजैरसुरान्वितैः ॥
ऐरावतः कल्पतरुश्चन्द्रमाः कमलालया[2] ।
उच्चैःश्रवाः समुत्पन्नः श्वेताश्वस्तदनन्तरम् ॥
देवमध्ये हरिः साक्षादिदमाह वचस्तदा ।
शृण्वन्तु देवताः सर्व्वाः श्वेताश्वं तं भुवस्तले ॥
सपर्य्याणं सोपकरं सायुधं व्याधिवर्ज्जितम् ।
यो राजा विप्रसात्कुर्य्यात्[3] स गच्छेन्मामकं पदम् ॥

---

(१) मथ्यते इति क्रोतलेखितपुस्तकपाठः ।

(२) कमलोद्भवा इति क्रोतलेखितपुस्तकपाठः ।

(३) कृत्वा इति क्रोतलेखितपुस्तकपाठः ।

तं हयं योऽनु गृह्णीयात् द्विजः पापपरायणः ॥
यागादिकमकृत्वा तु आत्मभोगपरायणः ॥
स भवेन्नरके विप्रो गर्दभः क्रोधसंयुतः ।
तस्य तु निष्कृतिः[1] प्रोक्ता तप्तकृच्छ्रव्रतत्रयात् ॥

लिङ्गपुराणे,—

श्वेताश्वं पुण्यकालेषु मुख्यकालेषु पर्व्वसु ।
सायुधं सहपल्याणमुपस्कर[2]समन्वितम् ॥
निष्कारणं द्विजोऽहृत्वा भवेद्दै[3] गर्दभो भुवि ।
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ॥
तप्तकृच्छ्रत्रयं कृत्वा केशानां वपनं चरेत् ।

त्रयं व्रतत्रयमित्यर्थः ।

उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
यागादिकरणे तस्य पञ्चगव्यमलं स्मृतम् ॥

न प्रायश्चित्तम् । तस्मात्[4] परिशुद्धो भवति ।

मत्स्यपुराणे—

सायुधं च सपल्याणमुपस्कर[5]समन्वितम् ।
पुण्यकालेषु तीर्थेषु दत्तं राज्ञा द्विजोऽग्रहीत् ॥

---

(१) निष्कृतिर्नास्ति इति क्रीतलेखितपुस्तकपाठः ।

(२) सोपस्करसमन्वितं इति क्रीतलेखितपुस्तकपाठः ।

(३) भवेद्गर्दभताभुवि इति लेखितपुस्तकपाठः ।

(४) तदुपरि शुद्धोभवति इति क्रीतपुस्तकपाठः ।

(५) सोपस्करसमन्वितं इति क्रीतपुस्तकपाठः ।

देहान्ते तस्य वै जन्म खरस्य क्रोधजन्मन: ।
तद्यनेन द्विजोयागं ऋणमोचन[1]मेव वा ॥
यज्ञत्वा यदि भोगी स्यात् स सद्योगर्हभी[2]स्तुत: ।
प्रायश्चित्तमिदं ज्ञात्वा तप्तकृच्छ्रव्रतत्रयं ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

[3]ब्रह्माण्डे,—

द्विजो[4]ह्ययं श्वेतरूपं गृह्णीयात्पुष्यसङ्क्रमे ।
तस्य वै निष्कृतिर्दृष्टा[5] तप्तकृच्छ्रव्रतत्रयात् ॥
केशानां वपनं कृत्वा पञ्चगव्येन शुध्यति ।

इति हेमाद्रौ श्वेताश्वप्रतिग्रहप्रायश्चित्तम् ।

---

(१) ऋणमोचनएव वा इति श्रौतपुस्तकपाठ: ।

(२) गार्हभीतस्तु: इति वैदिकपुस्तकपाठ: । गार्हभ: पुन: इति श्रौतपुस्तकपाठ: ।

(३) श्रौतपुस्तके नास्ति ।

(४) द्विजोऽयं श्वेतरूपेण इति श्रौतपुस्तकपाठ: ।

(५) निष्कृतिर्नास्ति इति श्रौतवैदिकपुस्तकपाठ: ।

( अथेदानीं तिलचक्रप्रतिग्रहप्रायश्चित्तमाह । )

ब्रह्माण्डे,—

पुरा शम्भूरथारूढ़ः प्रतस्थे पुरसाधने ।
वेदा हया सूर्य्यचन्द्रौ रथचक्रौ बभूवतुः ॥
मेरुर्धनुर्गुणः[1] शेषः सायकस्तु चतुर्भुजः ।
सारथिर्भगवान् साक्षात् शम्भुरेव हि साधकः ॥
तथाऽपि तेन राजेन्द्र न साध्यं तत्पुरत्रयं ।
पूजितं विप्रवर्य्याय दत्त्वा शीघ्रं पुरत्रयम् ॥
अजयत्पुर[2]मागत्य महेन्द्राय ददौ हरः ।
विड़ौजास्तु स्वयं कृत्वा अजयच्छत्रुमण्डलम् ॥
सर्व्वपापहरं पुण्यं सर्व्वोपद्रवनाशनं ।
राज्यदं स्वर्गदं नृणां तिलचक्रं सुदुर्लभम् ॥
पूजयित्वा द्विजाग्र्याय योदद्यात्सनरोभुवि ।
अनुभूय भुवश्चक्रं तदन्ते हरिमश्नुते ॥

स्कान्दपुराणे,—

पुण्यकाले पुण्यतीर्थे तिलचक्रं भुवः पतिः ।
पूजयित्वा द्विजे[3] दद्यात् तस्यान्तोनास्ति कुत्रचित् ॥

---

(—) अयं पाठः लेखितपुस्तके नोपलब्धः ।

(१) मेरुर्धनुर्गुणैः शोभा इति क्रीतपुस्तकपाठः ।

(२) पुनरागत्य इति क्रीतपुस्तकपाठः ।

(३) द्विजः इति क्रीतपुस्तकपाठः ।

स भुवो मण्डलं साग्रं शतवर्षं द्विजैः सह ।

पालयित्वा हरेर्वेश्म गच्छेत् स्वकुलसंयुतः ॥

तच्चक्रं यो द्विजोऽष्टत्वा बहुभिः कारणैर्विना ।

राजभिः पुण्यकालेषु दत्तं लोभपरायणः ॥

स भवेद्भुवि चाण्डालस्तिलघाती त्रिजन्मसु ।

तस्य वै निष्कृतिः प्रोक्ता[1] कृच्छ्रा[2]त्सान्तपनाच्छतात् ॥

निष्कृतिर्योगादिकर्म कृत्वा एकाहमुपोष्य पञ्चगव्यमेवाऽलं, न प्रायश्चित्तम् ।

तदेवाह,—

शिवधर्मोत्तरे,—

तिलचक्रं द्विजोऽष्टत्वा निष्कारणतया नृप ।

स भवेत्तिलघाती च त्रिषु जन्मसु पापभाक् ॥

कृत्वा शतं सान्तपनं शुद्धोभवति पापतः ।

अन्यथा पापमेवाशु भुक्त्वा नरकमश्नुते ॥

कृच्छ्रं सान्तपनं नाम महापातकनाशनं ।

एतच्छतं द्विजःकृत्वा तस्माद्दोषात्प्रमुच्यते ॥

सान्तपनकृच्छ्रलक्षणं कृच्छ्रप्रकरणेऽभिहितम् ।

इति हेमाद्रौ तिलचक्रप्रतिग्रहप्रायश्चित्तम् ।

---

(१) निष्कृतिर्नास्ति इति कौतपुस्तकपाठः ।

(२) कृच्छ्रसान्तपनात् इति कौतपुस्तकपाठः ।

( अथेदानीं तिलगर्भप्रतिग्रहप्रायश्चित्तमाह । )

[1]ब्रह्माण्डे,—

ब्राह्मणोब्रह्मसम्पन्नो यमलोकभयातुरः ।
[2]गर्भं तिलमयं क्वाऽपि न गृह्णीयाज्जनाधिपात् ॥
तिलगर्भं द्विजोधृत्वा तिर्य्यग्योनित्वमाप्नुयात् ।
न तस्य पुनरावृत्तिस्तिर्य्यग्जन्तोर्नराधिप ॥

नारदीये,—

इहलोके सुखं भुञ्जन् परलोकभयातुरः ।
त्यजेत्तिलमयं गर्भमन्यथा सूकरो भवेत् ॥

विष्णुधर्म्मे,—

निष्कारणं तिलमयं गर्भं [3]धर्त्ता द्विजोयदि ।
अनन्तं नरकं भुक्त्वा तिर्य्यग्योनित्वमाप्नुयात् ॥

देवीपुराणे,—

धृत्वा तिलमयं गर्भं पूर्व्वजः कारणं विना ।
[4]महान्तं दोषमाप्नोति सूकरोभुवि जायते ॥

तिलगर्भप्रायश्चित्तं हिरण्यगर्भप्रायश्चित्तवत्सर्व्वं कुर्य्यात् ।

इति हेमाद्रौ तिलगर्भप्रतिग्रहप्रायश्चित्तम् ।

---

(—) अयं पाठः लेखितपुस्तके नोपलब्धः ।

(१) ब्रह्माण्डे इति लेखितपुस्तके नास्ति ।

(२) तिलगर्भमयंक्वापि इति क्रीतपुस्तकपाठः ।

(३) धृत्वाइति क्रीतलेखितपुस्तकपाठः ।

(४) महद्दोषमवाप्नोति इति क्रीतलेखितपुस्तकपाठः ।

## अथेदानीं कनकप्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्माण्डे—

द्विजोयः पुण्यकालेषु तीर्थेष्वायतनेषु च ।
राजन्या[1]दन्यतोवाऽपि लोभमोहपरायणः ॥
कनकं प्रतिगृह्णीयाद् अणुमात्रमकिञ्चनः ।
स दरिद्रोभवेत् पापी नरकाननुभूय च ॥
पुनः संसृतिमाप्नोति मृतः कर्कोटकः कृमिः ।

नारदीये—

पुण्यकालेषु तीर्थेषु पुण्येष्वायतनेषु च ।
हिरण्यमणुमात्रं वा द्विजोयदि नराधिपात् ॥
प्रतिगृह्णाति स[2] पापी मृतः कर्कोटकः कृमिः ।
तस्य वै निष्कृतिः प्रोक्ता[3] चान्द्रायणचतुष्टयात् ॥

भारते—

कनकं प्रतिगृह्णीयाद् द्विजोनिष्कारणान्मुने !
स महानिरयं गत्वा कृमिः कर्कटसम्भवः ॥
पश्चात्तापसमायुक्तः चान्द्रायणचतुष्टयम् ।
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥

---

(१) राजन्योवान्यतोवापि इति लेखितपुस्तकपाठः । राजतोवान्यतोवापि इति क्रीतपुस्तकपाठः ।

(२) प्रतिगृह्यप्रभोः इति क्रीतलेखितपुस्तकपाठः ।

(३) निष्कृतिर्नास्ति इति क्रीतलेखितपुस्तकपाठः ।

ब्रह्मवैवर्त्ते—

ब्रह्मनाभिसमुद्भूतं [1]सुरवल्लीफलं तथा।
तद्वदाभाति सर्व्वत्र कनकं तदुदाहृतम्॥

राज्ञः[2]पापं तदा दग्ध्वा दानकाले विशेद्द्विजम्।
अतः प्रतिग्रहस्त्याज्यः द्विजैर्लोकेप्सुभिः सदा॥

कनकप्रमाणं स्तेयादिप्रकरणे द्रष्टव्यम्।

ब्रह्मवैवर्त्ते—

हिरण्यगर्भसम्भूतं कनकं यः समुद्वहेत्[3]।
पुण्यकालेषु पुण्येषु तीर्थेषु द्विजवल्लभात्॥

तस्य वै[4] निष्कृतिर्दृष्टा चान्द्रायणचतुष्टयात्।
अथवा त्रिः परिक्रम्य क्ष्मां शुद्धेत् परितोऽम्बुप!॥

अणुमात्रमितिश्लोके—प्रतिग्रहे कनकस्य यावत्प्रमाणं पूर्व्वमुक्तं तावत् प्रतिग्रहे पापबाहुल्यमित्यर्थः। कनकं शुद्धसुवर्णं खदिराङ्गारवत् दीप्तियुक्तम्। दानाध्याये यावत् प्रमाणमुक्तं तावदित्यर्थः।

इति हेमाद्रौ कनकप्रतिग्रहप्रायश्चित्तम्।

---

(१) कारवल्लो इति क्रीतलेखितपुस्तकपाठः।

(२) राजपापं इति क्रीतपुस्तकपाठः।

(३) समुद्वहन् इति क्रीतलेखितपुस्तकपाठः।

(४) तस्यैव इति क्रीतपुस्तकपाठः।

## अथ तिलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

मुखजो बाहुजाद्राजन् पुण्यकालेषु पर्व्वसु ।
तिलप्रतिग्रहं कृत्वा निष्कारणमथाऽधनः[1] ॥
महत्पापमवाप्नोति व्रणरोगी स[2] जायते ।

ब्रह्माण्डे—

मधुकैटभयोर्युद्धे मासमेकं निरन्तरम् ।
अत्यन्तग्लानिमापन्नो हरिः स्वेदधरस्तदा ॥
स्वेदविन्दुसमुत्पन्नास्तिलाराशीकृता[3] बभुः ।
तिलानालोक्य सहसा हरिरिन्द्र जगाद ह ॥
युष्मान्[4] दत्त्वा तु भुक्त्वा तु हुत्वा वा जनवल्लभः ।
स सर्व्वपापनिर्म्मुक्तो मामकं लोकमश्नुते ॥
इत्युक्त्वा तान् गृहीत्वाऽऽदौ ददौ मुनिगणाय सः ।
मधुकैटभनामानौ हत्वा वैकुण्ठमाप्तवान् ॥
तदाऽऽरभ्य तिलास्त्वेते लोकेऽस्मिन् सञ्चरन्ति हि ।
तानेतान् मानवो[5] दत्त्वा विष्णुलोकमवाप्नुयात् ॥

---

(१) निष्कारणतया धनी इति क्रीतपुस्तकपाठः ।

(२) प्रजायते इति क्रीतपुस्तकपाठः ।

(३) राशीभवन् तदा इति लेखितपुस्तकपाठः । राशीभवेत्तदा इति क्रीतपुस्तकपाठः ।

(४) युष्मान् दत्त्वा वा इति लेखितपुस्तकपाठः ।

(५) योनरः इति क्रीतलेखितपुस्तकपाठः ।

तस्यैव निष्कृतिरियं कण्ठदघ्नजलेवसन्।
प्रातरारभ्य-सायाह्ने फलभोजनमाचरेत्॥
तद्विष्णोरिति [1]मन्त्रेण माससात्रेण शुध्यति।

निष्कारणतया तिलान् प्रतिगृह्य पश्चात्तापसमायुक्तः प्रातःकाल-मारभ्य कण्ठदघ्नजले वसन् "तद्विष्णोः परमं पद"मितिमन्त्रमुच्चरन् सायंकाले विरम्य फलाहारं कृत्वा स्थण्डिले [2]शयीत, एवं मास-त्रयेण[3]शुद्धिमाप्नोति नाऽन्येन। दशमहादानमध्ये तिलदानस्य यावन्तस्तिला विहितास्तावत्परिग्रहे प्रायश्चित्तमिदं वेदितव्यं नाऽल्पस्य।

तदाऽऽह—

ब्रह्मपुराणे—

तिलप्रतिग्रहे विप्रः पश्चात्तापसमन्वितः।
प्रातः स्नात्वा नित्यकर्म्म समाप्य विधिपूर्व्वकम्॥
उदयाज्जलमाविश्य कण्ठदघ्नजलेवसन्।
तद्विष्णोरितिमन्त्रेण जपन्नासायमादरात्॥
विरम्य नियतः[4] सम्यक् फलाहारं समाचरेत्।

(१) इति वैश्नुत्वा इति श्रौतपुस्तकपाठः।
(२) शयेत् इति वेंकितपुस्तकपाठः।
(३) माषत्रये इति वेंकितपुस्तकपाठः।
(४) निरपं इति श्रौतवेंकितपुस्तकपाठः।

केवले स्थण्डिले सुप्त्वा स्मरन् नारायणं विभुम् ।
माससमात्रेण शुद्धः स्यात् अशुचिर्वोऽन्य[1]थाद्विजः ॥

इति हेमाद्रौ तिलदानप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं दासीप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

सुरूपां सुस्तनीं सुभ्रूं सुकेशीं शूद्रयोनिजाम् ।
[2]दासीं द्विजोनु गृह्णीयात् भोगार्थं पतितोभवेत् ॥
नित्यं नैमित्तिकं काम्यं सद्यः त्यरति पापिनः ।
विक्रयेद्यदि तां मूढश्चाण्डालत्वं तदाऽऽप्नुयात्[3] ॥

लिङ्गपुराणे—

दासीं शूद्रसमुत्पन्नां सर्व्वालङ्कारभूषिताम् ।
निष्कारणतया गृह्णन् विक्रीणाति रमेत वा[4] ।
चाण्डालयोनिमाविश्य वसेदाब्रह्मणः पदात् ॥

---

(१) नान्यथा इति क्रीत-लेखितपुस्तकपाठः ।
(२) प्रतिगृह्यद्विजोयदि इति क्रीतलेखितपुस्तकपाठः ।
(३) चाण्डालत्वमवाप्नुयादिति क्रीत लेखितपुस्तकपाठः ।
(४) विक्रयित्वा च तां रमेत् इति क्रीतपुस्तकपाठः ।

भविष्योत्तरे,—

दासीमलङ्कृतां राजन् दत्तां राजभिरादरात्।
प्रतिगृह्य द्विजोयस्तु कारणैर्बहुभिर्विना॥
रमेद्वा विक्रयेद्वाऽपि स चाण्डालोभवेत्तदा।
यावद्दह्ना सृजेद्विश्वं तावच्चाण्डालजन्मता[1]॥

शिवपुराणे,—

दासीमलङ्कृतां यस्तु प्रतिगृह्णाति वै द्विजः[2]।
पश्चात्तापसमायुक्तः प्रधानं स [3]परित्यजेत्॥
यागं कृत्वा ऋणं [4]तीर्त्वा तस्माद्दोषात् प्रमुच्यते।
अन्यथा निष्कृतिर्नास्ति त्रिवर्षं यावभक्षकः॥
केशानां वपनं कृत्वा पुनः संस्कारमाचरेत्।
एवं त्रिवर्षाच्छुध्येत अन्यदानैर्न शुद्धिभाक्॥

ब्रह्मवैवर्त्ते,—

दासीमलङ्कृतां शूद्रीं निष्कारणतया द्विजः।
प्रतिगृह्य पुनः पश्चात्तापेनाऽनेन संयुतः॥
कृत्वा त्रिषवणस्नानं जप्त्वा नारायणाक्षरं।
चतुर्थकालआयाते यवभुक्स्थण्डिले [5]स्वपन्।

---

(१) चाण्डालजन्मसु इति क्रीतपुस्तकपाठः।

(२) प्रतिगृह्य द्विजाधम इति क्रीतलेखितपुस्तकपाठः।

(३) सम्परित्यजेत् इति क्रीतपुस्तकपाठः।

(४) तीर्थं इति क्रीतपुस्तकपाठः।

(५) शयनु इति क्रीतलेखितपुस्तकपाठः।

प्रधानं सम्परित्यज्य वर्षत्रयमतन्द्रितः ।
इह लोके परत्राऽपि शुद्धिमाप्नोति दैहिकीम् ॥

एतत् प्रायश्चित्तं ऋण्याग्यकरणे वेदितव्यं, तदा पञ्चगव्यमात्रेण शुद्धिः । तयोरभावे प्रायश्चित्तेनाऽनेन शुद्धिमाप्नोति, नाऽन्यदानैरित्यर्थः । सर्पदष्टस्य यथा विषनिवारणमेवौषधं योजनीयं नाऽन्यथा तद्वदत्रापीत्यर्थः ।

इति हेमाद्रौ दासीप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं सोपस्करगृहप्रतिग्रहप्रायश्चित्तमाह—

ब्रह्माण्डे,—

गृहं सोपस्करं राज्ञः[1] प्रतिगृह्य द्विजाधमः ।
अकृत्वा तद्व्ययं भोगाद्[2]व्यालोभवति कानने ॥

लैङ्गे,—

सोपस्करं द्विजोराजन् प्रतिगृह्यैव बाहुजात् ।
यागादिकं न कुर्य्याच्चेद् दन्दशूकोभवेद्वने ॥

---

(१) राज्ञा इति वेङ्कितपुस्तकपाठः ।
(२) व्याली इति क्रातवेङ्कितपुस्तकपाठः ।
(३) वर्षपूर्त्यर्थं इति काशीपुस्तकपाठः ।
(४) तेन वञ्चितेत्यत्र नूतनेतिपाठः क्रीतवेङ्कितपुस्तकयोर्दृष्टः ।

सोपस्करमिति निक्षेपधान्यं पूर्णार्थम्, तेन सहितभाण्डखट्वादि कुशूलमुषलोलूखलकण्डनीदृषदुपलाखलारामकूपगोमहिष्यादिकमिन्धनादिकञ्च, गृहिणः प्रतिग्रहीतुर्वर्षपूरणं यथा[1] भवति तेन प्रकारेण सहितं गृहं निर्माय श्रोत्रियाय दत्त्वा गृहदानफलमाप्नोति, नोचेद्यद्यद्दत्तं तावन्मात्रमेवफलं, न ग्रहीतुरपि तावत्पापं, तदाऽऽह—

मार्कण्डेयः,—

सोपस्करं गृहं रम्यं निर्माय [2]सुदृढं प्रभुः ।
यः प्रयच्छेत् [3]पुण्यकाले श्रोत्रियाय कुटुम्बिने ॥
सप्तजन्मसु [4]राजन् स हरेः प्रीतिकरोभवेत् ।
तद्गृहीत्वा द्विजोलोभाद् विना यागादिकं[5] वृथा ॥
व्ययं कृत्वा च मूढ़ात्मा व्यालीभवति निर्जने ।
तद्दोषपरिहारार्थं वर्षार्त्तौ वर्षपीड़ितः ॥
मार्त्तण्डोदयमारभ्य क्लिन्नवासा बहिःस्थले ।
जपन् वै वारुणं सूक्तं स्वमूर्द्धन्यस्तवाहुकः ॥
मध्याह्ने नित्यकर्म्माणि तथा पूर्व्ववदाचरेत् ।
सायङ्काले फलाहारः स्वपेद्वै स्थण्डिले व्रती ॥

---

(१) यथेति क्रीतलेखितपुस्तकयोर्नास्ति ।

(२) दृढ़वत् इति क्रीतलेखितपुस्तकपाठः ।

(३) पुण्यतीर्थे इति क्रीतलेखितपुस्तकपाठः ।

(४) राजेन्द्र इति क्रीतलेखितपुस्तकपाठः ।

(५) यागादिकमनर्थकं इति क्रीतलेखितपुस्तकपाठः ।

वर्षर्त्तुमेवं नीत्वाऽथ शुद्धिमाप्नोत्यनुत्तमां ।

वारुणं सूक्तं हिरण्यशृङ्गमित्यनुवाकः ।

ब्रह्माण्डे,—

सोपस्करं गृहं विप्रः प्रतिगृह्णाति चेन्नृपात्[1] ।

तस्येह[2] निष्कृतिर्नाऽस्ति सुघोरात्सर्पजन्मतः[3] ॥

वर्षर्त्तौ जलवातार्त्तः क्लिन्नवासा जितेन्द्रियः ।

न्यस्तबाहुः स्वोत्तमाङ्गे वहिरेव वसन् सदा ॥

जपन् वै वारुणं सूक्तं यावदस्तङ्गतोरविः ।

तदा विरम्य मनसा फलाहारं समाचरेत् ॥

स्थण्डिले च स्वपेद्रात्रौ कृतं पापमनुस्मरन् ।

एवं मासद्वयं नीत्वा गृहदानप्रतिग्रहात् ॥

तस्माद्दोषात् प्रमुक्तःस्या[4]दन्यथा भुजगोभवेत् ।

यागे ऋणे वा सर्व्वस्वव्ययं कृत्वा न दोषभाक् ॥

प्रधानत्यागमथवा पशुनिक्षेपवर्ज्जितं ।

कृत्वा शुद्धिमवाप्नोति न भुङ्क्ते[5] सर्पजन्म सः ॥

इति हेमाद्रौ गृहदानप्रतिग्रहप्रायश्चित्तम् ।

---

(१) प्रतिगृह्णन्नराधिपात् इति क्रीतलेखितपुस्तकपाठः ।

(२) तस्यैव इति लेखितपुस्तकपाठः ।

(३) सर्पजन्मत्वतोऽन्वप इति क्रीतपुस्तकपाठः । सर्व्वजन्मत्वयाऽन्वप इति लेखितपुस्तकपाठः ।

(४) स्यभूदिति क्रीतलेखितपुस्तकपाठः ।

(५) भुक्ते इति लेखितपुस्तकपाठः ।

## अथ शय्याप्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे—

शय्यां सोपस्करां दिव्यां सखट्वां सुखगोद्विजः ।
पुण्यकाले पुण्यतीर्थे राज्ञो[1] गृह्णाति लोभतः ॥
तस्य मृत्युभयं प्रोक्तं षण्मासाभ्यन्तरे यमात् ।
ततः पिशाचतां याति त्रिषु जन्मसु गोखरः ।

स्कन्दपुराणे—

एकादश्यां पौर्णमास्यां चन्द्रसूर्यग्रहे द्विजः ।
पुण्यदिने पुण्यतीर्थे शय्यां चोपस्करान्विताम् ॥
राज्ञः सम्पादयेद्यस्तु तस्य मृत्युभयं भवेत् ।
ततः पिशाचोभवति [2]गोखरत्वमवाप्यते ॥

भविष्योत्तरे—

आषाढ़शुक्लद्वादश्यां पुण्यतीर्थे नराधिप ।
शय्यां सोपस्करां राज्ञां द्विजोयः सम्प्रतिग्रहेत् ॥
[3]स खरत्वमवाप्नोति मृत्युवक्त्राद्विमोचितः ।
तस्य वै[4] निष्कृतिर्नास्ति तीर्थैर्दानशतैरपि ॥

---

(१) राज्ञां यदिह संग्रहादिति क्रीतलेखितपुस्तकपाठः ।
(२) गोखुरत्वमिति क्रीतपुस्तकपाठः ।
(३) नखरत्वं इति लेखितपुस्तकपाठः ।
(४) तस्यैव इति क्रीतपुस्तकपाठः ।

ब्रह्माण्डे—

शयनोत्थानद्वादश्योः[1] पुण्यकाले नदीतटे ।
सखट्वां दामसंयुक्तां शय्यां यः सम्परिग्रहेत् ॥
षण्मासान्मृत्युमाप्नोति गोखरत्वमवाप्यते ।
[2]तस्य वै निष्कृतिर्दृष्टा ब्रह्मणा लोकवर्त्तिना ॥
चतुर्भागव्ययं वाऽपि यागार्थं दक्षिणां वहन् ।
अभाव[3]सम्भवे राजन् शृणु निष्कृतिमुत्तमाम् ॥
वसन्तर्त्तौ जले स्नात्वा अश्वत्थं समुपाश्रयेत् ।
हस्तमात्रं विलिप्याऽथ गोमयेन सुवर्च्चसा ॥
उपविश्याऽत्र देशे वै नित्यकर्म्म समाप्य च ।
माध्याह्निकं ततः कृत्वा पुनः कर्म्म समाप्य च ॥
मौनी व्रतमुपस्थाय जपेदस्तमयावधि ।
त्रियम्बकं महामन्त्रं न्यासध्यानपुरःसरम् ॥
माध्याह्निकं समाप्याऽथ[4] पुनः कर्म्म समाचरेत् ।
सायं सन्ध्यामुपासित्वा नित्यहोमं समाप्य च ॥
फलाहारं ततः कृत्वा स्थण्डिले स्वगृहे स्वपेत् ।
ब्रह्मचर्य्यं व्रतं कुर्व्वन् कृतं पापमनुस्मरन् ॥

---

(१) द्वादश्यां इति क्रीत पुस्तकपाठः ।

(२) तस्यैव इति क्रीतपुस्तकपाठः ।

(३) अभाव सम्भवाद् इति लेखितपुस्तकपाठः ।

(४) ततः कृत्वा इति क्रीतलेखितपुस्तकपाठः ।

एवं मासद्वयं नीत्वा शुद्धः स्यात्तत्परिग्रहात्।
अन्यथा दोषमाप्नोति पिशाचत्वं [1]व्रजेदिह॥

सोपस्करमिति शय्यादोलार्थं शृङ्खलाचतुष्टयं हस्तपादनिवेश-नार्थं[2] सूक्ष्मावरणवद्[3] उपबर्हणं सोत्तरच्छदञ्च। एतत् सोपस्करम्। सोपस्करं तल्पं द्विजैर्निष्कारणार्थं लोकेस्सुभिर्न प्रतिग्राह्यम्। उभयोरभावे मधुमाधवमासयोः पूर्व्वोक्तनिष्कृतिं कृत्वा तल्पपरि-ग्रहात् शुद्धिमाप्नोतीत्यर्थः।

इति हेमाद्रौ शय्याप्रतिग्रहप्रायश्चित्तम्।

---

## अथेदानीं कन्याप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

ब्राह्मणोब्रह्मसम्पन्नो ब्रह्मचर्य्यपुरस्कृतः।
समुद्वहेत् स्वकुलजां कन्यां ब्राह्मादिषु स्थिताम्॥
तयोः प्रसूतः[4] कुलजः पितृभक्तिपरायणः।
सन्तारेदुभयं लोकं तत्पुत्रः पुण्यवान् द्विज!॥

---

(१) भवेदिह इति कीतलेखितपुस्तकपाठः।

(२) निद्रेशनार्थं इति कीतलेखित पुस्तकपाठः।

(३) सूक्ष्मतल्पवत् इति कीतलेखितपुस्तकपाठः।

(४) प्रसूतनुकुलज इति कीतपुस्तकपाठः।

ब्राह्मादिषु त्रिषु विवाहेषु कन्यास्वीकरणे न दोषः ।

तदेवाह ।

नारदीये---

ब्राह्मोदैवस्तथाचाऽऽर्षः प्राजापत्यस्तथासुरः ।

गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोमतः ॥

तेषां त्रयः प्रशस्ताः स्युः शेषाः[1] पञ्च विगर्हिताः ।

तस्माद् ब्राह्मादिषु ब्रह्मन् विवाहः पुण्यलोकदः ॥

एवं द्विजोयः कुरुते स्वपितॄनुद्धरे[2]त्तथा ।

एतत्पुण्यतमं त्यक्त्वा यो विप्रोवासुजादिषु ॥

कन्यार्थं धनमादाय कामलोभपरायणः ।

तद्द्रव्येण विवाह्यैनां [3]जायते खलु पापभाक् ॥

रतिमात्रं सुखं तस्य सन्ततिर्दातुरेव हि ।

तस्मादेतत्परित्याज्यं द्विजैः सर्व्वत्र सर्व्वदा ॥

ब्राह्मणव्यतिरिक्तजातिभ्यः कन्यकाधनसंग्रहे दोषमाह ।

कूर्म्मपुराणे,—

मुखजोऽन्यत्र जातिभ्योविवाहार्थं धनं वहन् ।

तेनाऽपूतेन वसुना यदि कन्यां समुद्वहेत् ॥

---

(१) तेषां इति क्वीतपुस्तकपाठः ।

(२) उद्धरेत् इति क्वीतखे खतपुस्तकपाठः ।

(३) कन्यां वहिह इति क्वीतखेखितपुस्तकपाठः ।

स विप्रः पतितोभूयात् तत्पुत्राः पतिताः स्मृताः[1] ।
तत्पत्नी तत्सुता राजन् वृथा यत्र धनार्ज्जनम् ॥
कलौयुगे विशेषेण स्वजातेः[2] सम्परिग्रहः ।
तेषु मुख्यतमः प्रोक्तः कलौ नेच्छन्ति तद्बुधाः[3] ॥

ब्रह्मवैवर्त्ते—( कलिवर्ज्जधर्म्मान् प्रक्रम्य )

स्वजाते[4]रन्यजातिभ्योद्विजैः कन्यापरिग्रहः ।
दत्तक्षताया: कन्याया: पुनर्दानं परस्य च ॥
समुद्रयातास्वीकारः कमण्डलुविधारणम् ।
दीर्घकालं ब्रह्मचर्य्यं वर्ज्जनीयं[5] कलौयुगे ॥
अतः पाणिग्रहार्थं वा नाहरेद्दनमन्यतः ।
अपत्यार्थं विवाहश्च यागार्थं धनसंग्रहः ॥
ब्राह्मण्यं परलोकार्थं ब्रह्मचर्य्यन्तु मुक्तये ।
पातिव्रत्यं कुलार्थन्तु जपः पापप्रणाशने ॥
सत्यं धर्म्मप्रतिष्ठार्थं आचारः कुलवृद्धये ।
तस्मात्कन्या परित्याज्या विप्रेणाऽन्यकुलोद्भवा ॥

---

(१) भवन् इति क्रीतवेंचितपुस्तकपाठः ।

(२) स्वजातिः स परिग्रह इति क्रीतवेंचितपुस्तकपाठः ।

(३) सूरय इति क्रीतवेंचितपुस्तकपाठः ।

(—) अयं पाठः क्रीतवेंचितपुस्तकयो र्न दृष्टः ।

(४) स्वजातिरिति वेंचितपुस्तकपाठः ।

(५) वर्ज्जयित्वा इति क्रीतवेंचितपुस्तकपाठः ।

कन्येति कन्यकार्थधनपरिग्रहः तत्परिग्रहे दोषं प्रायश्चित्तञ्चाह ।

कूर्म्मपुराणे,—

मुखजः पुण्यकालेषु पुण्यदेशेषु पर्व्वसु ।
जातिवयादनं धृत्वा उद्वहेत्[1] सुखलिप्सया ॥
सा पत्नी तत्कुलोद्भूता तत्सन्तानन्तदिष्यते ।
तद्भर्त्ता च वयं लोके यावत्कालं प्रकीर्त्त्यते[2] ॥
तत्कुलं तत्पतिः पुत्राः पतिताःस्युर्न संशयः ।
तथैवं वर्ज्जयेत् पश्च विप्रोलोकपरायणः ॥
कन्यादानं नमस्कारं भोजनं सहभाषणम् ।
आमन्त्रणं पितुः श्राद्धे स्वप्नेऽपि च न संस्मरेत् ॥
प्रायश्चित्तं यदीच्छेत पश्चात्तापसमन्वितः ।
पत्नीपुत्रान् परित्यज्य प्रायश्चित्तं समाचरेत् ॥

पूर्व्वं[3] यत्पतितप्रायश्चित्तमुक्तं तत्सर्व्वं कृत्वा शुद्धिमाप्नोति नान्यतः ; तत्पुत्राणां तत्पत्न्याश्च प्रायश्चित्तं नेच्छन्ति । पतित-प्रायश्चित्तं सम्यक् कृत्वा स्वकुले कन्यामुद्वाह्य लोकसम्मत्या व्यव-हरेत्, एतत् पापं प्रकटयेत् न गूढ़येत्, तदाह ।

---

(१) दारार्थं गीतलेखितपुस्तकपाठः ।
(२) चरेर्दिति इ क्रीतलेखितपुस्तकपाठः ।
(३) सर्व्वं पतितप्रायश्चित्तमिति क्रीतपुस्तकपाठः ।

नारदः,—

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥
तस्माद् द्विजः कुलेऽन्यत्र नाहरेद्दारसंग्रहम् ।

इति हेमाद्रौ कन्याप्रतिग्रहप्रायश्चित्तम् ।

---

अथेदानीं कपिलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

कपिलां वत्ससहितां राज्ञा[1] दत्तामलङ्कृताम् ।
पुण्यकाले च पुण्यर्क्षे द्विजोयः सम्परिग्रहेत् ॥
तस्य[2] वै जन्मवैफल्यं विपिनस्येव चन्द्रिका ।
यावन्ति धेनुरोमाणि तावन्नरकमश्नुते ॥

हरिवंशे,—

कपिलां संग्रहेद् वत्सां द्विजोलोभपरायणः ।
तद्रोमाणीह यावन्ति तावन्नरकमश्नुते ॥

---

(१) राज्ञामिति वेङ्कितपुस्तकपाठः ।
(२) तस्यैव इति क्रीतपुस्तकपाठः ।

मत्स्यपुराणे,—

कपिला ब्रह्मणादत्ता लोकोपकरणादिह ।
राजा दद्याद् द्विजेभ्यश्च देहपापापनुत्तये ॥
इतीरितं तदा वाक्यं मान्धातृप्रमुखैर्नृपैः[1] ।
तां गृहीत्वा द्विजेभ्यश्च दद्युः पापापमोचनीम् ॥
तदाप्रभृत्यसौधेनुर्दातॄणां पुण्यवर्द्धिनी ।
सर्व्वथा पुण्यकालेषु स्वर्गदा धेनुरर्पिता[2] ॥

नारदीये—

कपिलां समलङ्कृत्य सवत्सां विधिपूर्व्वकम् ।
अर्चयित्वा द्विजाग्र्याय यो दद्यात् सोऽपि पुण्यभाक् ॥
तां तु यो मुखजो धृत्वा यतते[3] द्रव्यसंग्रहे ।
सोऽरण्ये निर्ज्जने देशे गवयो भवति ध्रुवम् ॥
[4]तस्येह निष्कृतिर्नास्ति त्रिषु जन्मसु पार्थिव ।

ब्रह्माण्डपुराणे—

द्विजो गृह्णाति [5]वै दत्तां राज्ञा वत्सान्वितां सतीम् ।
कपिलां द्रव्यवात्सल्यात् स भवेत् गवयो वने ॥

---

(१) प्रमुखान्नृपाइति लेखितपुस्तकपाठः ।

(२) धेनुदायिनो इति क्रीतलेखितपुस्तकपाठः ।

(३) इया तद्द्रव्यसंग्रहे इति क्रीतलेखितपुस्तकपाठः ।

(४) तस्यैव इति क्रीतलेखितपुस्तकपाठः ।

(५) दत्तां पुण्यकाले इति क्रीतलेखितपुस्तकपाठः ।

तस्यैव निष्कृतिरियं दृष्टा मुनिवरोत्तमैः।
गां सवत्सां परित्यज्य तद्द्रव्यं यागपूर्त्तये॥
व्ययं कृत्वा ऋणी वाऽपि न दोषो[1] कपिलाग्रहे।
प्राजापत्यसहस्राणां [2]त्रयेण शुद्धिरीरिता॥
पूर्व्वोक्तेनैव मार्गेण परिषद्विधिपूर्व्वकम्।
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत्॥
आधानी वा भवेत्[3]कुर्य्याद् दर्शपूर्णादिकाः क्रियाः॥
न भवेत्तेन दोषोऽत्र अग्निर्दहति पातकम्॥
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत्।

तदाह—

आपस्तम्बः—

"अग्नीन् आध्यास्ये सर्व्वक्रत्वर्थमिति" वचनबलादाधानदीक्षामनुसरन् अग्निहोत्रादिकाः क्रियाः समाचरन्[4] सर्व्वपापेभ्योमुक्तो भूया"दिति वेदितव्यम्।

इति हेमाद्रौ कपिलाधेनुप्रतिग्रहप्रायश्चित्तम्।

---

(१) दोष इति लेखितपुस्तकपाठः।
(२) त्रयाणां इति लेखितपुस्तकपाठः।
(३) सोऽपि इति लेखितपुस्तकपाठः।
(४) सुचरन् इति क्रोतलेखितपुस्तकपाठः।

अथेदानीं पृथिवीप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

पृथिवीं भूमिपालेन दत्तां शालीक्षुसम्भवाम्।
यागार्थमग्निहोत्रार्थं प्रतिगृह्य[1] द्विजोत्तमः॥
तत्रोद्भवेन धान्येन आधानादिकमाचरेत्।

आधानानन्तरं दर्शपूर्णमासादिकं कुर्य्यादित्यर्थः।

ब्रह्माण्डे—

ब्रह्मविद् ब्राह्मणस्तस्माद्[2] भुवं भूपालवल्लभात्।
प्रतिगृह्याऽग्निहोत्रादीन् अतिथींश्चापि पूजयेत्॥

मार्कण्डेयपुराणे—

कुटुम्बपालनञ्चैव क्रतुर्वा यावती च भूः।
समाप्तिश्च यथा कार्य्या तावतीं क्ष्मां परिग्रहेत्॥

महाराजविजये,—

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।
सत्क्रियाः क्षयमापन्ना धर्म्मोऽपक्षीयते तदा॥
तदा प्रतिग्रहोभूमेः विप्रस्यैव न दोषभाक्।

अशीतिवर्षादूर्द्ध्वं वृद्धः। या नारी स्वप्नेऽपि परं न चिन्तयेत् न सम्भावयेत् पतिपादप्रक्षालनादिकं मनसाऽप्यकुत्सयन्ती प्रत्यहं

(१) पृथ्वीयाह्या द्विजोत्तमैरिति क्रीतपुस्तकपाठः।

(२) यस्मात् इति क्रीतलेखितपुस्तकपाठः।

कुर्य्यात् सा साध्वी । षोड़शवर्षात् पूर्व्वं शिशुः, सत्क्रियाः अग्निष्टोमादयः, धर्म्मो नित्यस्नानादिः । तदा क्ष्मापरिग्रहो विप्रस्य न दोषः, यावत्या भुवा एतेषां परिपूरणं भवति तावद्भूमिपरिग्रहे न दोषः ।

विष्णुरहस्ये,—

पितृपत्नीसुतानाञ्च अग्निष्टोमादिकर्म्मणाम् ।
[1]संरक्षणाय राजेन्द्र न दोषः क्ष्मापरिग्रहे[2] ॥
विनाऽप्येतैर्निमित्तैर्यः पृथिवीं संग्रहेद्द्विजः ।
[3]स सभार्य्यः सपुत्रश्च नरके वासमश्नुते ॥

मार्कण्डेयपुराणे,—

धान्यं प्रभूतं मुखजस्तत्रजातं वृथाव्यये ।
[4]विक्रीय निजभोगार्थं "भवेयं धनिको" भुवि ॥
इत्यहङ्कारसंयुक्त चाण्डालत्वमवाप्नुयात् ।
निष्कृतिस्तस्य कथिता वसिष्ठेन महात्मना ॥
पादत्रयेऽब्दकृच्छ्रं स्यात् तत्त्रैगुण्ये त्रिधा स्मृतम् ।
बीजानां प्रस्थमात्राणां प्रसूति[5] र्यावती क्षितिः ॥

---

(१) पापसंहरणे राजन् इति क्रीतपुस्तकपाठः—
(२) क्ष्मापरिग्रह इति क्रीतपुस्तकपाठः ।
(३) सभार्य्यं पुत्रसहित इति क्रीतलेखितपुस्तकपाठः ।
(४) विक्रयित्वात्मभोगार्थं इतिक्रीतलेखितपुस्तकपाठः ।
(५) समाप्तिरिति क्रीतलेखितपुस्तकपाठः ।

तस्याः प्रतिग्रहे कार्य्यं मुनिभिः परिकीर्त्तितम् ।
[1]प्रसूतिर्द्रोणबीजानां पृथिवी यावती भवेत् ॥
तस्याः परिग्रहे चान्द्रं प्रायश्चित्तं विशोधनम्[2] ।
स विप्रः शूद्रतां याति वृथा भूमेः परिग्रहात् ॥

( विंशत्यादशभिर्द्रोणैर्यावती क्ष्मा महीभुजा । दत्ता तस्याग्रहेविप्रश्चान्द्रायणशतञ्चरेत् । अतोधिकाया ग्रहणे प्रायश्चित्तं न दृश्यते )

पितार्ज्जितं निजं क्षेत्रं राजाक्रान्तं यदा भवेत् ।
आत्मार्ज्जितं वा राजेन्द्र समाक्रान्तं नृपात्मजैः ॥
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण पोषणम् ।
जीवनं धर्म्मसिद्धिर्वा अथवा ऋणमोचनम् ।
तावत् प्रतिग्रहे दोषो न भवेदिति निश्चितम् ॥

कूर्म्मपुराणे,—

राजाक्रान्तं जनाक्रान्तं क्षेत्रं पिताऽर्ज्जितं यदि ।
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण जीवनम् ॥
तावत् प्रतिग्रहेद्विप्रो [1]राज्ञस्तस्मान् न दोषभाक् ।

इति हेमाद्रौ पृथिवीप्रतिग्रहप्रायश्चित्तम् ।

---

(१) समाप्तिरिति क्रीतलेखितपुस्तकपाठः ।

(२) न दृश्यते इति लेखितपुस्तकपाठः ।

(—) अयं पाठः लेखितपुस्तकेनोपलब्धः ।

(१) राज्ञातेन इति क्रीतपुस्तकपाठः ।

अथेदानीं सप्ताचलप्रतिग्रहप्रायश्चित्तं ब्रुवन्
कनकाचलप्रतिग्रहप्रायश्चित्तमाह—

तदाह,—

देवीपुराणे,—

अचलं कानकं पुण्ये[1] राज्ञः पुण्यानुवर्त्तिनः ।
द्विजो य इह गृह्णाति स[2]भजेद्दै पिशाचताम् ॥

कनकस्वरूपमाह,—

लिङ्गपुराणे,—

पूतिष्वष्टसु संशुद्धं शोधितं वह्नितापनात् ।
अतीव शुक्लतां याति कनकं तदुदाहृतम् ॥

पद्मपुराणे,—

कनकाद्रिं द्विजोदत्तं[3] राजभिः पुण्यवर्त्तिभिः ।
[4]प्रतिगृह्णन् हि पुण्याहे सम्भवेत् पिशिताशनः ॥

मार्कण्डेयपुराणे,—

कनकाद्रिं नदीतीरे पुण्यकालेषु राजभिः ।
दत्तं द्विजश्चेद् गृह्णीयात्[5] पिशाचः स्याद्विरूपकः ॥

---

(१) छत्वा इति लेखितपुस्तकपाठः ।
(२) मोहात्मा इति क्रीतलेखितपुस्तकपाठः ।
(३) छत्वा इति क्रीतलेखितपुस्तकपाठः ।
(४) पुण्यकालेषु इति लेखितपुस्तकपाठः ।
(५) तत्तद्दुद्विजोऽनुगृह्णीयादिति लेखितपुस्तकपाठः ।

( नदीषु पुण्यकालेषु पुण्यतीर्थेषु पर्व्वसु ।

कनकाद्रिं द्विजोधृत्वा लोभान्निष्कारणं भुवि ॥

स भवेद्विन्ध्यदेशेषु—पिशाचः कान्तिवर्ज्जितः । )

चतुर्थांशव्ययं कृत्वा यागं वा बहुदक्षिणम् ।

प्रायश्चित्तेन पूतात्मा पुनः संस्कारमाचरेत् ॥

शुद्धिमाप्नोति लोकेऽस्मिन् अर्हता नित्यकर्म्मसु ।

भिक्षाटनं वरं नृणां एतस्मात् सम्परिग्रहात् ॥

संसारं वा त्यजेद्विद्वान् सन्यासं वा परिग्रहेत्[1] ।

एवं मुक्तिमवाप्नोति कनकाद्रिं त्यजेदतः ॥

अपरिग्रहस्य विप्रस्य शुद्धा वृत्तिः कथिता ।

उञ्छवृत्तिः शिलवृत्तिः कुम्भवृत्तिः कुशूलता ॥

चतुर्द्धा वृत्तयः प्रोक्ताः कनकाद्रिप्रतिग्रहात् ।

एतासां पूर्व्वोक्तानामभावे कनकाद्रिग्रहे प्रायश्चित्तमाह—

मार्कण्डेयपुराणे,—

कनकाद्रिं द्विजोयस्तु गृह्णाति कारणैर्विना[३] ।

स तु शुद्धिमवाप्नोति कृच्छ्रैरयुतसंख्यकैः[४] ॥

कृच्छ्राणि प्राजापत्यानि ।

---

(—) अयं पाठः लेखितपुस्तके नोपलब्धः ।

(१) वा परिग्रहं इति क्रीतलेखितपुस्तकपाठः ।

(२) कृत्वा इति क्रीतलेखितपुस्तकपाठः ।

(३) कृत्वा निष्कारणं सुधीः इति क्रीतपुस्तकपाठः ।

(४) कृच्छ्राणामयुतसंख्यया इति क्रीतलेखितपुस्तकपाठः ।

लिङ्गपुराणे—

कनकाद्रिं द्विजोऽष्टत्वा राज्ञः पुण्यागमे हया ।

कृच्छ्रैरयुतसंख्याकैः शुद्धिमाप्नोति नाऽन्यथा ॥ इति ।

इति हेमाद्रौ कनकाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रजताचलप्रतिग्रहप्रायश्चित्तमाह ।

वामनपुराणे—

राजतं योगुरुह्णीयात् (अचलं राजवल्लभात् ।

पूर्व्वजो भोगमोहात्मा कालपाशवशं गतः ॥

तत्पापमनुभूयाऽऽशु बलाकः स भवेद्वने ।

त्रिषु जन्मसु कङ्कः) स्यात् श्वेतरोगीभवेत्ततः[1] ॥

शिवपुराणे—

राजभिः पुण्यकालेषु दत्तं योरजताचलम् ।

विना निमित्तैर्बहुभिः [2]प्रतिगृह्णाति भोगवान् ॥

---

(—) अयं पाठः क्रीतपुस्तके नास्ति ।

(१) भवेत् तदा इति क्रीतपुस्तकपाठः ।

(२) प्रतिगृह्णात्यभोगवान् इति क्रीतपुस्तकपाठः ।

ग्रीष्मं कालवयं गत्वा दुःखं तत्राऽनुभूय च ।
[1]बलाकः स भवेत्पश्चात् श्वेतरोगी स जायते ॥
( जन्मत्रये तु कष्टः स्यात् तदा मुक्तिर्न जायते । )[2]

स्कन्दपुराणे—

राजतं प्रतिग्रह्याऽद्रिं[3] प्रायश्चित्तपराङ्मुखः ।
[4]बलाकः स भवेत्पश्चात् कष्टः स्यात् त्रिषु जन्मसु ॥
कथञ्चिन्मुक्तिमापन्नः श्वेतरोगी भवेत्तदा ।

एतदकृतप्रायश्चित्तपरं कृतप्रायश्चित्तस्य न [5]बलाकत्वादि तदेवाह—

गारुड़पुराणे—

प्रायश्चित्तेन पूतस्य द्विजस्याऽस्य मृतस्य यत् ।
तस्येह न[6] बलाकादिर्दैहिकोऽप्युदिरोरिता ॥
प्रायश्चित्तं पुरा कृत्वा धर्म्मशास्त्रोक्तमार्गतः ।

---

(१) बालक इति क्रीतपुस्तकपाठः ।
२(—) इदमर्द्धं वेङ्कितपुस्तकेनास्ति ।
(३) बकलं प्रतिग्रह्याद्रौ इति क्रीतवेङ्कितपुस्तकपाठः ।
(४) बालक इति क्रीतपुस्तकपाठः ।
(५) न बालकादि इति क्रीतपुस्तकपाठः ।
(६) तस्येत इति क्रीतवेङ्कितपुस्तकपाठः ।

ततः पश्चात् पुनः कर्ध्वं पञ्चगव्यं पिबेत्ततः[1]॥

एवं पूतस्य विप्रस्य पश्चिजन्म न जायते।

कनकाचलप्रतिग्रहप्रायश्चित्तार्धमत्राऽपि निष्कृतिर्नाऽन्यथा।

इति हेमाद्रौ रजताचलप्रतिग्रहप्रायश्चित्तम्।

---

अथ रत्नाचलप्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयः—

रत्नाचलं द्विजोधत्ते[2] यस्तः पुण्यागमे तु यः।

न तस्य पुनरावृत्तिर्नरकात्त्रयदायिनः।

ब्रह्माण्डे—

गङ्गातीरेऽथ गौतम्यां कृष्णवेणीनदीतटे।

श्रीशैले सङ्गमे वाऽपि भीमरथ्यानदीतटे॥

श्रीशैले महादेवे वैद्यनाथस्य सन्निधौ।

काञ्चीस्थले वेङ्कटाद्रौ श्रीरङ्गे कुम्भकोणके[3]॥

---

(१) अनन्तरं इति श्रीतवेंकितपुस्तकपाठः।

(२) पश्चात् इति श्रीतवेंकितपुस्तकपाठः।

(३) कुम्भकर्णके इति वेंकितकाशीपुस्तकपाठः।

मथुरायां महाराज चाप्यथ गन्धमादने ।
योद्विजोधनलोभेन राज्ञा दत्तानिमान् गिरीन् ॥
[1]गृह्णाति तस्य विप्रस्य पैशाच्यं जन्मनान्वये ।
निष्कारणतया भूप निमज्जन् नरकार्णवे ॥
पैशाचान्ते मर्त्त्यलोके[2] जायते पिटकाकृतिः ॥
तेषां मध्ये तथा राजन् रत्नाचलपरिग्रहात् ।
मरुखे निर्ज्जले देशे पिशाचोभवति ध्रुवम् ॥

स्कन्दपुराणे,—

ग्रहणे संक्रमे चैव मन्वादिषु युगादिषु ।
अयने द्वितये चैव व्यतीपाते च वैधृतौ ॥
कृष्णाङ्गारचतुर्द्दश्यां अमायां [3]पूर्णिमादिने ।
द्वादश्यां पुण्यनक्षत्रे द्विजोलोभपरायणः ॥
अचलान् राजभिर्द्दत्तान् [4]प्रतिगृह्य पृथक् पृथक् ।
अकृत्वा [5]निष्कृतीस्तेषां तत्तत्पापविमुक्तये ॥
यमस्य सदनं गत्वा अनुभूय महद्भयम् ।
पिशाचो भवति क्षिप्रमरण्ये निर्ज्जनेऽजले[6] ॥

---

(१) न गृह्णातीति क्वोतलेखितपुस्तकपाठः ।

(२) मत्त्युलोके इति क्वोतपुस्तकपाठः ।

(३) पौर्णिमादिने इति लेखितपुस्तकपाठः ।

(४) एषु पुण्यदिनेष्विह इति लेखितपुस्तकपाठः । येषु पुण्यदिनेष्विह इति तु क्रीतपुस्तक-पाठः ।

(५) निष्कृतिं इति क्रीतपुस्तकपाठः ।

(६) वने इति क्रीतपुस्तकपाठः ।

भविष्योत्तरे,—

रत्नाचलमिमं धृत्वा द्विजोनिष्कारणान्मुने[1] ।
अकृत्वा निष्कृतिं तस्य मृत्वा नरकमाप्नुयात् ॥
[2]पिशाचानुभवं कृत्वा जायते पिटकाकृतिः ।
तस्यैव निष्कृतिरियं ब्रह्मणा परिकल्पिता ॥
अरण्यं निर्ज्जनं गत्वा शून्ये देवालये विभम् ।
कृत्वा चिषवणस्नानं भपकृष्णाजिनं वहन् ॥
मौनव्रतमुपास्थाय वीरासनमुपाश्रितः ।
रुद्राध्यायं जपेन्नित्यं तावत्संख्याः समाचरन् ॥
यावदस्तं गतोभानुर्विरमेत्तावता जपात् ।
अव्रतन्नं पयोवाऽपि अश्नतो फलभोजनम् ॥
स्वपेच्च स्थण्डिले रात्रौ द्विजस्यैतस्य निष्कृतिः ।
एवं ऋतुत्रयं नीत्वा शुद्धिमाप्नोति वैदिकीम् ॥
अश्नतो तच्चनस्यार्द्धं [3]व्रतार्थं व्ययमाचरेत् ।
एवञ्चैनिष्कृतिर्दृष्टा[4]रत्नाचलपरिग्रहात् ॥
पुनः संस्कारमात्रेण शुद्धोभवति निश्चितम् । इति

---

(१) शुनिरिति वेश्चितवाणीपुस्तकपाठः ।
(२) पिशाचादि भयं कृत्वा इति क्रीतपुस्तकपाठः ।
(३) तदर्द्धमिति क्रीतवेश्चितपुस्तकपाठः ।
(४) भूप इति क्रीतवेश्चितपुस्तकपाठः ।

प्रतिग्रहलब्धधनस्य चतुर्थभागेन पूर्ववत् प्रायश्चित्तं कृत्वा पुनः-संस्कारकाले ब्रह्मोपदेशं गायत्रीं '[1]गुरोः स्वीकृत्य शुद्धिमाप्नोति, नान्यथा शुद्धिरस्तीत्यर्थः ।

इति हेमाद्रौ रत्नाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ धान्याचलप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

धान्याचलप्रदाता यः पुण्यक्षेत्रेषु पर्व्वसु ।
अर्च्चयित्वा द्विजाग्र्याय स वै लोकाधिपोभवेत् ॥

[2]कूर्म्मपुराणे,—

अर्च्चिताय[3] द्विजाग्र्याय धान्याचलमनुत्तमम् ।
अर्च्चितं शास्त्रमार्गेण पुण्य[4]तीर्थेषु पर्व्वसु ॥
यो दद्यात् पृथिवीपालः स गच्छेद् विष्णुमन्दिरम् ॥

---

(१) गुरुत्या इति कोतवेखितपुस्तकपाठः ।

(२) क्रोतपुस्तके नास्ति ।

(३) अर्च्चयित्वा इति कोतपुस्तकपाठः ।

(४) कालेषु इति क्रोतपुस्तकपाठः ।

लिङ्गपुराणे,—

धान्याचलं द्विजोर्मोहात् पुण्यकाल उपागते ।
प्रतिग्रह्य नृपश्रेष्ठात् अकृत्वा धर्म्मसंग्रहम् ॥
आरामेष्विक्षुदेशेषु पिशाचोदुर्भगोभवेत् ।
तत्राऽनुभूय नरकं पुनर्मूषिकतां[1] व्रजेत् ॥

स्कन्दपुराणे,—

शृणु षण्मुख वक्ष्यामि धान्याचलपरिग्रहे ।
दोषं परिग्रहीतुर्वै राज्ञो धर्म्मानुवर्त्तिनः ॥
शालिक्षेत्रे वने वाऽपि आरामे वृक्षसङ्कुले ।
पिशाचोदुर्भगोनाम त्रासयन् वै जनान् बहून् ॥
महान्तं नरकं भुक्त्वा अकृत्वा धर्म्मनिष्कृतिम् ।
स भवेत् मूषिकः[2] स्थूलस्त्रिषु जन्मसु संग्रहात् ॥

भविष्योत्तरे,—

धान्याचलं द्विजोऽहृत्वा द्रव्यलोभपरायणः ।
अकृत्वा निष्कृतिं तस्य स भवेत्पिशिताशनः ॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम् ।
पुनः संस्कारमात्रेण शुद्धिमाप्नोति दैहिकीम् ॥

---

(१) मूषकतां इति मोतपुस्तकपाठः ।

(२) मूषकः इति मोतपुस्तकपाठः ।

भविष्योत्तरे,—

(धान्याचलस्य महतस्तस्य निष्कृतिरीरिता ।
यागादिकं पुराऽकृत्वा कुर्य्याच्चान्द्रायणत्रयम् ॥
पुनः संस्कारशुद्धात्मा गायत्रीं मध्यवेद्द्विजात् ।
तां पठन् प्रयतोनित्यं वर्त्तयेद्यदि बुद्धिमान् ।
अन्यथा निष्कृतिर्नाऽस्ति पापस्यैतस्य गौरवात् ॥ )

विष्णुपुराणे,—

सप्ताऽचलाः समुद्राश्च निर्म्मिताश्चक्रपाणिना ।
जनानां पापनाशाय स्मरणात्कीर्त्तनादिह ॥
तेषां प्रतिग्रहे राजन् पतितः स्याद्द्विजाधमः ।
अतस्तस्य पुनः कर्म्म मुनिभिः परिकीर्त्तितम् ॥

पुनःकर्म्म पुनःसंस्कार इत्यर्थः ।

इति हेमाद्रौ धान्याचलप्रतिग्रहप्रायश्चित्तम् ।

---

(—) अत्र क्रीतपुस्तक पाठः ।
“धान्याचलं द्विजोऽष्टत्वा द्रव्यलोभपरायणः ।
अकृत्वा निष्कृतिं तस्य च भवेत्त्रिषितापनः ॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम् ।
पुनःसंस्कारपूतात्मा गायत्रीमध्यसेद्द्विजः ॥
तां पठन् प्रयतोनित्यं वर्त्तयेत् स विमुक्तिमान् ।
अन्यथा निष्कृतिर्नास्ति पापस्यैतस्य गौरवात् ॥

अथ तिलपर्व्वतप्रतिग्रहप्रायश्चित्तमाह ।

नारदीये,—

तिलाचलः कालपुरुषस्तिलधेनुस्तिलास्तथा ।
तिलकृष्णाजिनञ्चैव शकटं सयुगं तथा ॥
एतानि विप्रवर्य्याणां महानरकदानि वै ।
निष्कारणतया राजन् प्रतिगृह्य द्विजाधमः ॥
महान्तं नरकं भुक्त्वा गत्वा स्त्रीजन्म निन्दितम्[1] ।
पश्चात्तापसमायुक्तः प्रायश्चित्तं यदीच्छति ॥
प्रायश्चित्तेन महता[2] पुनः संस्कारमर्हति ।

ब्रह्माण्डे,—

धनलोभेन योविप्रः समादत्ते[3] तिलाचलम् ।
सप्तजन्मसु नारी स्यात् तत्राऽपि विधवा भवेत् ॥
नार्य्येव नरकस्थानं किमन्यैर्बहुभाषितैः ।
वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते ।
तत्राऽपि बालवैधव्यं तिलाचलप्रतिग्रहात् ॥

---

(१) महान्तं नरकं गत्वा स्त्रीजन्म तदनन्तरमिति क्वीतपुस्तकपाठः ।

(२) मनसा इति क्वीतलेखितपुस्तकपाठः ।

(३) प्रतिगृह्य इति क्वीतलेखितपुस्तकपाठः ।

स्कन्दपुराणे,—

पुण्यकालेषु वै[1] पुत्र पुण्यतीर्थेषु पर्व्वसु।
तिलाचलं द्विजोधृत्वा महान्तं नरकं व्रजेत्॥
पश्चाद्भवति नारीत्वं सप्तजन्मसु कुत्सितम्।
वैधव्यदुःखभाग्भूत्वा[2] पश्चात् कण्डूतिमान् भवेत्॥
अतोद्विजन्मनः पुत्र! धनिकस्य तिलाचलम्।
[3]प्रतिगृह्य भवेद्‌विप्रोयागादिषु पराङ्मुखः।
अजागलस्तनमिव तस्य जन्म तदा वृथा॥

भविष्योत्तरे,—

विप्रस्तिलाचलं धृत्वा भूपालात्[4] पुण्यपर्व्वसु।
शुद्धोयागादिकं कृत्वा अन्यथा नित्यसूतकी॥

कूर्म्मपुराणे,—

यावन्तः पर्व्वता राजन् तिलराशीकृता नृभिः।
तावन्ति पापजालानि ग्रहीतुर्नाऽत्रसंशयः[5]॥
अतोविप्रवराणाञ्च गर्हणं तत्परिग्रहः।
यदीच्छेन्मनसा शुद्धिं तिलाचलप्रतिग्रहात्॥

---

(१) वः इति क्वचित्लेखितपुस्तकपाठः।
(२) वैधव्यं दुःखनामेत्य इति क्वचित्लेखितपुस्तकपाठः।
(३) कृत्वा प्रतिपत्तं इति क्वचित्लेखितपुस्तकपाठः।
(४) राजतः इति लेखितपुस्तकपाठः।
(५) वर्त्तः पुत्र न संशय इति क्वचित्लेखितपुस्तकपाठः।

अनुज्ञातो द्विजेन्द्राणां मनसा हरिं[1] मनुस्मरन् ।
नद्यां समुद्रगामिन्यां प्रातःस्नात्वा यथाविधि ॥
नित्यकर्म्म समाप्याऽथ स्वगृहे देवसन्निधौ ।
स्वगृह्याग्निं प्रतिष्ठाप्य आज्यभागान्तमाचरेत् ॥
त्र्यम्बकेणैव मन्त्रेण तिलैराज्याभिमिश्रितैः ।
आसायं जुहुयाद्वह्नौ तावत्संख्यां समुद्वहन् ॥
[2]विमुच्य च तदा होमं तमग्निं न त्यजेद्बुधः ।
अव्रतघ्नान् तिलान् भुक्त्वा[3] स्वपेद्देवगृहे मुदा ॥
परेद्युः प्रातरुत्थाय पूर्व्ववद्धोममाचरेत् ।
यावत् प्रयुतसंख्या स्यात् तावद्धोमं समापयेत् ॥
उपोष्य रजनीमेकां पुनः संस्कारमाचरेत् ।
एषा विशुद्धिरुदिता तिलानाञ्च प्रतिग्रहे ॥
अन्यथा निष्कृतिर्नाऽस्ति दानैस्तीर्थाव[4]गाहनैः । इति

प्रयुतं दशलक्षं, तदुक्तं—

महाभारते—

प्रयुतं दशसाहस्रं नियुतं लक्षमुच्यते ।
प्रयुतं दशलक्षं स्याद् अर्व्वुदं कोटिरुच्यते ॥ इति ।

---

(१) अर्च्चयन् इति क्रीतपुस्तकपाठः ।

(२) विरम्याथ तदा होमं इति क्रीत पुस्तकपाठः ।

(३) भुक्त्वा इति लेखितपुस्तकपाठः ।

(४) तीर्त्वा इति लेखितपुस्तकपाठः ।

एतत्प्रायश्चित्तं पूर्व्ववत् स्वधनस्य चतुर्भागव्ययेन कुर्य्यात्, अन्यथा न निष्कृतिः ।

इति हेमाद्रौ तिलाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ कार्पासाचलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

सवोजक्रमिकोटाद्यैः शोधितं पुण्यपर्व्वसु ।
कार्पासं द्विजवर्य्याय योदद्यात् सोऽपि मुक्तिभाक् ॥

ब्रह्माण्डे—

कार्पासस्याऽचलं राजा पुण्यक्षेत्रेषु पर्व्वसु ।
अर्च्चितं गन्धवस्त्राद्यैः शास्त्रमार्गेण धर्म्मतः ॥
योदद्याद् द्विजवर्य्याय स मुक्तः संसृतेर्भयात् ।
तद्बीजानीह यावन्ति तावत्कालं वसेद्दिवि ॥

कूर्म्मपुराणे,—

कार्पासस्याऽचलं विप्रः प्रतिगृह्य जनाधिपात् ।
सद्यः पतति पुण्यानि तस्य[1] पापानि सन्दिशेत् ॥

---

(१) कर्त्तुः इति श्रीतवेश्चितपुस्तकपाठः ।

स विप्रः पतितोभूयाद् ब्रह्मघाती नरेश्वर।
मृतः कालवशं गत्वा काकोलं नरकं व्रजेत्॥
तदन्ते भुवमासाद्य श्वेतरोगी दरिद्रकः[1]।
पत्नीपुत्रपरित्यागी दुःखितः स्यात्पुनः पुनः॥

ब्रह्माण्डपुराणे,—

योविप्रः पुण्यकालेषु गिरिङ्कार्पाससंभितम्।
अर्च्चितं गन्धवस्त्राद्यैः[2]प्रतिगृह्णाति भूपतेः॥
अकृत्वा स[3]व्रतं सम्यक् यमपाशवशङ्गतः।
काकोलं नरकं गत्वा श्वेतरोगी भवेद्भुवि।
अथ तद्दोषशान्त्यर्थं प्रायश्चित्तं चरेद्बुधः॥

स्कन्दपुराणे,—

कार्पासस्याचले पुत्र प्रायश्चित्तमिदंशृणु।
पश्चात्तापसमायुक्तः प्राप्याऽनुज्ञां द्विजोत्तमैः॥
विपिनं निर्ज्जनं गत्वा वपनङ्कारयेत्ततः।
तत्र त्रिषवणस्नानं कृत्वा विष्णुपरायणः॥
नाभिमात्रजले स्थित्वा [4]प्राङ्मुखोदङ्मुखः शुचिः।
पुरुषसूक्तं जपंस्तिष्ठेद् यावद्भवोदयाञ्चले॥

---

(१) दरिद्रवान् इति कौतवेञ्चितपुस्तकयोः पाठः।
(२) प्रतिगृह्णन्नराधिपात् इति कौतवेञ्चितपुस्तकपाठः।
(३) तद्व्रतं इति कौतवेञ्चितपुस्तकपाठः।
(४) प्राङ्मुखगुदङ्मुखः शुचिरिति काशीपुस्तकपाठः।

ततो विरम्य सहसा संख्यां मनसि धारयन् ।
मुष्टिद्वयमितान् सक्तून् भक्षयेद्गुडवर्ज्जितम् ॥
स्वपेन्नारायणस्याऽग्रे केवले स्थण्डिले व्रती ।
पुनः परेद्युरुत्थाय पूर्व्ववज्जपमाचरेत् ॥
यथैव पूर्व्ववत्संख्या यावत्कालेन साध्यते ।
तदा विरम्य पूर्व्वेद्युरुपोष्य विधिपूर्व्वकम् ॥
पुनः कर्म्म तदा कुर्य्याद् दण्डमौञ्ज्या[1]जिनं विना ।
एतेनैव विशुद्धिः स्यान्नाऽन्यथा शुद्धिरिष्यते ॥

एतत्प्रायश्चित्ताकरणे पूर्व्ववत्स्वधनस्य चतुर्भाग[1]व्ययेन प्रायश्चित्तं कुर्य्यात् । तेन शुद्धोभवतीत्यर्थः ।

इति हेमाद्रौ कार्पासाचलप्रतिग्रहप्रायश्चित्तम् ।

---

अथ लवणाचलप्रतिग्रहप्रायश्चित्तमाह—

मार्कण्डेयपुराणे,—

लवणाचलं नरपतिरादरात् कुरुते यदा ।
पुण्यदेशे पुण्यनदीतटेषु विमलेषु च ॥

---

(१) चतुर्भागेन इति श्रीतर्कचित्तपुस्तकपाठः ।

तदा विप्राय दद्यात् तं ग्रामशीलवते स्वयम्।
एवं हि तस्य न भूमौ पुनरात्मसमुद्भवः॥

स्कान्दपुराणे,—

पुरा हिमवतः पार्श्वे वन्यका काचिदप्सराः।
सुकेशी सुदती सुभ्रूर्हसन्ती सुन्दरस्तनी॥
विहारार्थं वहिर्गत्वा विचरन्ती गृहाङ्गणे।
तदा तामवलोक्याऽथ रावणोनाम राक्षसः[1]॥
कामातुरोमोहवशात्[2] हस्तन्तग्राह पाणिना।
हस्तस्पर्शनमात्रेण तस्या[3]भूत्सात्त्विकोदयः॥
स्तम्भःप्रलापोरोमाञ्चः स्वेदोवैवर्ण्यवेपथू।
अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः॥
स्वेदोदकं तदा तस्य नदीभूत्वा[4] प्रवर्त्तते।
तदा प्रभृत्यसौ सिन्धुर्लावणो भुवि विश्रुतः॥
सा तदा हिमवत्पार्श्वात् प्रत्येकं सागराङ्गता।
स्वेदरूप[5] प्रवाहेण पत्नीभावपरिष्कृता॥
अङ्गीचकार सलिलं लावण्यं लवणाम्बुधि।
तदा प्रभृत्यसौ सिन्धुरदधे जलसङ्गमात्॥

---

(१) दैत्यराट् इति क्रीतवेचितपुस्तकपाठः।
(२) तदातन्वीं इति क्रीतवेचितपुस्तकपाठः।
(३) तदा इति क्रीतवेचितपुस्तकपाठः।
(४) नदीरूपा इति वेचितपुस्तकपाठः।
(५) स्वेदरूपा इति क्रीतपुस्तकपाठः।

अत्यूषरतया राजन् लवणोदधिरीरितः ।
तेनोत्पन्नं तु लवणं दोषाधिकतया मुने ॥
न प्रतिग्रहणं तस्य केचिदिच्छन्ति सूरयः ।
लवणं चाऽणुमात्रं वा प्रतिगृह्णाति चेद्द्विजः[1] ।
तन्निष्कृतिं परावृत्य विन्ध्यदेशे पिशाचता ॥

मार्कण्डेयपुराणे,—

लवणस्याऽचलं धृत्वा राज्ञः पुण्यागमे सकृत् ।
विप्रोयदिह दुष्टात्मा यमपाशवशङ्गतः ॥
महान्तं नरकं भुक्त्वा पिशाचोभवतिध्रुवम् ।
पश्चाद्भुवमुपागम्य खेदाङ्गोजायते सदा ॥

ब्रह्मवैवर्त्ते—

पूर्व्वजस्त्वचलं धृत्वा लावणं राजवल्लभात् ।
[2]पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद् यमलोकमुपागतः ।
महद्भयं तदा भुक्त्वा पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामेत्य तदन्ते खिन्न[3]देहवान् ।
अतः प्रतिग्रहस्तस्य गर्हितो लोकवर्ज्जितः ॥

(१) प्रतिगृह्यद्विजोयदि इति श्रीतवेष्टितपुस्तकपाठः ।

(२) पुण्यतीर्थेषु पुण्यदेशेषु इति श्रीतपुस्तकपाठः ।

(३) खेददेहवान् इति श्रीतवेष्टितपुस्तकपाठः ।

शिवपुराणे,—

मुखजो बाहुजाद्‌ दृत्वा लावणमचलं भुवि।
पिशाचत्वं व्रजेत्[1] पश्चात् स्वेदाङ्गोजायते पुनः॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमिदं द्विजैः।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः[2]॥
विप्रानुज्ञामवाप्याऽथ पश्चात्तापसमन्वितः।
[3]स्नात्वा शुभनदीतोये गत्वा पर्व्वतगह्वरम्॥
[4]कण्टकप्रचयं दृत्वा स्वमूर्द्धन्यात्मनः सदा।
तत्र तिष्ठन् जपेदेनं सर्व्वपापापनुत्तये॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम।
आधारं सर्व्वमन्त्राणां यावदस्तं गतोरविः॥
तदा विरम्य सहसा संख्यां मनसि धारयन्।
पलद्वयप्रमाणेन पिबेद्‌गोदुग्धमादरात्॥
स्वपेन्नारायणस्याऽग्रे स्थण्डिले केवले भुवः।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमा[5]चरेत्॥
एवं ऋतुद्वयं कृत्वा नियतं विधिपूर्व्वकम्।
रुद्राध्यायं पठेद्वा उत विष्णोरनुज्ञया॥

---

(१) भवेदिति क्रीतशेखितपुस्तकपाठः।
(२) कथयामि च इति क्रीतपुस्तकपाठः।
(३) कृत्वा इति क्रीतपुस्तकपाठः।
(४) कण्टकं वादरं इति क्रीतपुस्तकपाठः।
(५) आदरात् इति क्रीतशेखितपुस्तकपाठः।

एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत् तद्धनस्यार्द्धं प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नाऽस्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं, सर्व्वमन्त्राणा आकरत्वात् । एवं कृते लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

तदेवाह,—

दशाध्यायं सकृज्जप्त्वा सर्व्वपापैः प्रमुच्यते ।
अत्यशनादतिपानात् [1]तथाचोग्रात् प्रतिग्रहात् । इति ।

अत्यशनं सपिण्डीकरणश्राद्धादिषु निमित्तेष्वस्थाने भोजनमत्यशनं अतिपानं शूद्रप्रपादिषु पानमतिपानम् । उग्रप्रतिग्रहः शूद्रादिभिर्दत्तस्य[2] [3]लवणाचलादेः प्रतिग्रहः । प्रायश्चित्तपक्षे पुनः संस्कारं पूर्व्ववत् कृत्वा शुद्धोभवति नाऽन्यथेति ।

इति हेमाद्रौ लवणाचलप्रतिग्रहप्रायश्चित्तम् ।

---

(१) दत्तस्येति क्रीतवेचितपुस्तकपाठः ।

(२) शूद्रहस्तान्वितः इति क्रीतपुस्तकपाठः ।

(३) यच्च चोग्यात् इति क्रीतपुस्तकपाठः ।

## अथ तिलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

महापुण्यनदीतीरे व्यतीपाते च वैधृतौ ।
ग्रहणे संक्रमे चैव मन्वादिषु युगादिषु ॥
राज्ञा दत्तां तिलमयीं धेनुं गन्धाक्षतैर्युताम् ।
अर्चितां योद्विजोधृत्वा इतोमृत्युवशङ्गतः ॥
[1]सोऽनुभूय महाघोरां वेदनां यमनिर्मिताम् ।
पश्चाद् भवति पापात्मा निष्पुत्रो रोगवान् भुवि ॥

कूर्मपुराणे—

पुण्यतीर्थेषु[2] पुण्याहे जन्मर्क्षे जन्मसम्भवे ।
दत्तां राजभिर्गन्धाद्यैरर्चितां तिलरूपिणीम् ॥
योद्विजः प्रतिगृह्याशु [3]न कुर्यान्निष्कृतिं शुभाम् ।
तस्यैव[4]मृत्युरायाति अनुभूय महद्भयम् ॥
पश्चात्पापी महान् घोरोनिष्पुत्रो[5]रोगवान् भवेत् ।
तिलाः सन्तीह यावन्तोह्यजिने धेनुवत्सयोः ॥

---

(१) अनुभूय इति क्रीतलेखितपुस्तकपाठः ।
(२) पुण्यकालेषु इति क्रीतपुस्तकपाठः ।
(२) अकृत्वा इति क्रीतलेखितपुस्तकपाठः ।
(४) तथैव इति लेखितपुस्तकपाठः ।
(५) रागवान् इति लेखितपुस्तकपाठः । रोषवान् इति क्रीतपुस्तकपाठः ।

तावद्युगसहस्राणि नरके वासमश्नुते[1] ।
तस्येह नित्यकर्म्माणि चरन्ते तत्प्रतिग्रहात् ॥
तस्मात्प्रतिग्रहो धेनोर्निष्कारणतया नृप ।
गर्हितो मुख्यजानां हि तस्मादेतत् परित्यजेत् ॥

लैङ्गे,—

पूर्व्वोक्तेष्वेषु पुण्येषु दिनेषु पृथिवीपते: ।
धेनुं तिलमयीं विप्रो गृह्णीयाद्यदि लोभतः[2] ।
तस्य नित्यञ्च काम्यञ्च इष्टापूर्त्तादिकञ्च यत् ।
सर्व्वं [3]चरति तत्काले दानमग्नौ चिये यथा ॥
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ।
तद्द्रव्यं सम्परित्याज्यं दक्षिणामात्रमुद्वहेत्[4] ॥
आधानं वा क्रतुं वापि कृत्वा सर्व्वस्वदक्षिणम् ।
ततः शुद्धिमवाप्नोति पुनः संस्कारपूर्व्वकम् ।
अन्यथा निष्कृतिर्नास्ति पञ्चचान्द्रायणै[5]र्विना ॥

---

(१) पापमश्नुते इति क्रीतलेखितपुस्तकपाठः ।

(२) धेनुं तिलमयीं हृत्वा विप्रोभोगप्रदायको इति क्रीतलेखितपुस्तकपाठः ।

(३) तरति इति लेखितपुस्तकपाठः ।

(४) उद्वहन् इति क्रीतलेखितपुस्तकपाठः ।

(५) पञ्चचान्द्रायणं विना इति क्रीतपुस्तकपाठः ।

स्कन्दपुराणे—

दौर्ब्राह्मण्यनिवृत्त्यर्थं धेनुं तिलमयीं द्विजः ।
गृहीत्वाऽऽधानयागौ[1] च कृत्वा तत्राऽग्रशेषयेत् ॥
प्रधानं सम्परित्यज्य न दोषस्तत्प्रतिग्रहात् ।
अथवा पञ्चभिश्चान्द्रैः[2] शुद्धिमाप्नोति वैदिकीम् ॥
पुनः संस्कारमात्रेण नित्यकर्म्मस्विहाऽर्हता ।
उभयं यः परित्यज्य[3] वर्त्तते भोगलोलुपः ॥
स मृत्वा[4] निष्प्रजोभूयात् तिलरोगीमहान् भुवि ॥

इति हेमाद्रौ तिलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ घृतधेनुप्रतिग्रहप्रायश्चित्तमाह—

स्कन्दपुराणे,—

धेनुं घृतमयीं दत्तां[5] कृष्णाजिनपरिष्कृताम् ।
स्वर्चितां गन्धवस्त्राद्यैराजभिः पुण्यसङ्गमे ॥

---

(१) अग्न्याधानञ्च यागञ्च इति क्रीतलेखितपुस्तकपाठः ।

(२) चान्द्रैः इति क्रीतपुस्तकपाठः ।

(३) परित्यक्ता केवलं इति क्रीतपुस्तकपाठः ।

(४) तदन्ते इति क्रीतलेखितपुस्तकपाठः ।

(५) शुद्धां इति क्रीतपुस्तकपाठः ।

वृथा परिग्रहं [1]कृत्वा द्विजोयागादिभिर्विना ।
यमलोकमुपागम्य कुम्भीपाके निमज्जति ॥
तदन्ते भुवमासाद्य दैवज्ञोजायते भुवि ।
अतोमहादोषभयात् परित्याज्या[2] द्विजन्मभिः ॥

लिङ्गपुराणे—

धेनुमेकां द्विजोराजन् अजिने घृतनिर्म्मिताम् ।
सवत्सां घृतधेनुं[3] यो निष्कारणतया वहेत्[4] ॥
कुम्भीपाके निमज्जेत्[5] पीड़ितोयमकिङ्करैः ।
तदन्ते पृथिवीमेत्य वैणवानां कुलोद्भवः ॥
हीनजातिषु सर्व्वासु भूत्वा भूत्वा न निष्कृतिः ।
यागादिकं न कुर्य्याच्चेद्[6] एतस्मान्न विमुच्यते ॥

गारुड़पुराणे,—

कृष्णाजिनेषु पुण्येषु निर्म्मितां घृतरूपिणीम् ।
प्रदत्तां[7] राजपुरुषैर्धेनुं यो मुखजोवहेत्[8] ॥

---

(१) त्यक्त्वा इति क्रीतलेखितपुस्तकपाठः ।

(२) परित्यागः इति क्रीतपुस्तकपाठः ।

(३) घृतधेनुंसवत्सेन इति क्रीतपुस्तकपाठः ।

(४) वहत् इति लेखितपुस्तकपाठः ।

(५) निमज्जेत् इति लेखितपुस्तकपाठः । तत्रुज्ज्वेत् इति क्रीत-पुस्तकपाठः ।

(६) अकृत्वाचेत् इति लेखितपुस्तकपाठः ।

(७) पूजितां इति क्रीत-पुस्तकपाठः ।

(८) वहन् इति लेखितपुस्तकपाठः ।

तस्यैव नरकोघोरः कुम्भीपाकः समुज्ज्वलन्।
तत्र भुक्त्वा पुनः पापी प्राप्य वैणवजन्मताम्॥
नानायोनिषु सम्भूयाद् यागादिषु पराङ्मुखः।
पश्चात्तापसमायुक्तः प्रायश्चित्ती भवेत्ततः॥

तत्र प्रायश्चित्तमाह—

ब्रह्माण्डे,—

घृतधेनुं राजदत्तां स्वर्चितां वस्त्रभूषणैः।
पुण्यकालेषु पुण्याहे प्रतिगृह्णाति चेद्द्विजः[1]॥
द्रव्यलोभपरीतात्मा प्रायश्चित्तमिदञ्चरेत्।
नदीषु पुण्यतीर्थेषु स्नातः प्रातर्यथाविधि॥
स्वगृहं पुनरागत्य स्वगृह्याग्नौ विशुद्धये।
अग्नीन्धनादिकं कृत्वा आज्यभागान्तमाचरेत्॥
तस्मिन्नग्नौ सपत्नीकः कुष्माण्डै[2] र्जुहुयाद्घृतम्।
तदर्द्धं गणहोमञ्च कृत्वा शुद्धिमवाप्नुयात्॥
निराहारस्तदा तिष्ठेत् पयोवा धेनुसम्भवम्।
अधःशायी पिवेत्तत्र[3] पत्नीपुत्रविवर्ज्जितः॥
एवं व्रती दिनं कुर्य्यात् संख्यां यावत् समाप्य च।
तदन्ते भोजयेद् गव्यं होमशेष विशुद्धये॥

---

(१) प्रतिगृह्णाद्द्विजोयदि इति क्रीतलेखितपुस्तकपाठः।

(२) कुष्माण्डं इति क्रीतपुस्तकपाठः।

(३) भवेत्तत्र इति लेखितपुस्तकपाठः।

ब्राह्मणान् भोजयेत् पश्चात् परिक्रम्य प्रणम्य च ।
स्वयञ्च पारणं कुर्य्यात् पत्नीपुत्रसमन्वितः ॥
एवं कृत्वा द्विजः शुद्धेर[1]दन्यथा पातकी भवेत् ।

एतदाचरणेऽसमर्थः स्वधनार्द्धार्द्धभागेन पूर्व्ववत् प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।

इति हेमाद्रौ घृतधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

अथ जलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

शृणु दोषान्[2] प्रवक्ष्यामि जलधेनुप्रतिग्रहे ।
अमायां सर्व्वसंक्रान्तौ द्वादशीपूर्णिमादिने[3] ॥
महातीर्थेषु पुण्येषु तथा पुण्यालयेषु च ।
कृष्णाजिनेन निर्म्माय धेनुं जलमयीं शुभाम् ॥
अर्च्चितां ब्रह्मरूपाद्यैः धर्म्ममार्गेण राजभिः ।
दत्तां गृहीत्वा योविप्रो[4] द्रव्यलोभपरायणः ॥

---

(१) शुद्ध इति कौतबेखितपुस्तकपाठः ।

(२) वत्स इति कौतबेखितपुस्तकपाठः ।

(३) पौर्णमीदिने इति लेखितपुस्तकपाठः ।

(४) द्विजोद्दयाग्राही इति बेखितपुस्तकपाठः ।

आत्मन:परलोकार्थं न [1]कुर्य्यान्निष्कृतिं यदि ।
सोऽनुभूय महत्पापं यमलोके तदाज्ञया ॥
पुनर्भूभागमासाद्य जायते कच्छपोमहान् ।
तत:प्रतिग्रहोदोष: पूर्व्वजानामिहाऽन्यत: ॥

कूर्म्मपुराणे,—

धृत्वा जलमयीं धेनुं द्विजोभोगपरायण: ।
अर्च्चितां प्रभुभिर्दत्तां[2] शास्त्रपूतेन वर्त्मना ॥
यागादिकं पराकृत्य पराकृत्य च निष्कृतिम् ।
पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद्यमलोकमुपागत: ।
महद्भयं तदा भुक्त्वा पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामेत्य जायते[3] स्वेददेहवान् ।
अत: प्रतिग्रहस्तस्य गर्हितोलोकवर्ज्जित: ॥

[ शिवपुराणे,—

मुखजो बाहुजाद्‌ धृत्वा लावण्यमचलं भुवि ।
पिशाचत्वं मृतोयाति[4] स्वेदाङ्गोजायते पुन: ॥

---

(१) अकृत्वा इति क्रीतलेखितपुस्तकपाठः ।
(२) पूतां इति क्रीतपुस्तकपाठः ।
(३) तदन्ते इति क्रीतलेखितपुस्तकपाठः ।
(४) अपेत्तस्य इति लेखितपुस्तकपाठः ।

तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमिदं द्विजैः ।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः ॥
विप्रानुज्ञामवाप्याऽऽशु पश्चात्तापसमन्वितः ।
स्नात्वा शुद्धनदीतोये गत्वा पर्व्वतगह्वरम् ॥
कण्टकैर्मुकुटं धृत्वा स्वमूर्द्धन्यात्मनः सदा ।
तिष्ठन् तत्र जपेदेनं सर्व्वपापापनुत्तये ॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम् ।
आधारं सर्व्वमन्त्राणां यावदस्तं गतो रविः ॥
तदा विरम्य सहसा संध्यां मनसि धारयन् ।
पलद्वयप्रमाणेन पिबेद्गोदुग्धमादरात् ॥
स्वपन्नारायणस्याऽग्रे स्थण्डिले केवले भुवि ।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमादरात् ॥
एवं क्रतुद्वयं कृत्वा नियुतं विधिपूर्व्वकम् ।
रुद्राध्यायं पठेत् यद्वा उत विष्णोरनुज्ञया ॥
एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत्तद्दनार्द्धेन प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नास्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं सर्व्वमन्त्राणां आकरकत्वात् । एवं लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

दशाध्यायं सकृत् जप्त्वा सर्व्वपापैः प्रमुच्यते ।

तदेवाह,—

अत्यशनादतिपानात् तथा चोग्रात्प्रतिग्रहात्

दम्भाद्वा वा यदि वा मोहात् पराङ्गत्वैव निष्कृतिं
क्षिप्त्वा क्षारोदके कूपे तदन्ते भुवमाविशन् ॥
अगाधे जायते कूर्म्मो ह्रदे जलपरिष्कृते ।
एतद्दोषोपशान्त्यर्थं प्रायश्चित्तं समाचरेत् ॥
(महापाप) भयाद्भूप त्याज्योविप्रैः प्रतिग्रहः ]* ।

मत्स्यपुराणे,—

प्रतिगृह्य द्विजो मोहाद् धेनुं जलमयीं नृपात् ।
यागादिकं स्वशुद्धिं वा अकृत्वा भोगलोलुपः ॥
यमलोके महाघोरे तीर्त्वा क्षारोदकं बलात् ।
तदन्तेऽत्र समागत्य जायते कच्छपोजले ॥
एतद्दोषोपशान्त्यर्थं त्याज्योविप्रैः प्रतिग्रहः ।
गण्डक्यां वाऽथ गौतम्यां कृष्णवेख्यां नदीजले ।
कावेर्य्यां तुङ्गभद्रायां चापाग्रे गन्धमादने ॥
आत्मनः सम्मतं तीर्थं यदेतेषु च[१] सम्भवेत् ।
अनुज्ञाप्य द्विजैः साकं गत्वा तत्र यतात्मवान्[२] ॥
निमित्तं कीर्त्तयित्वाऽथ स्नायान्मौषलमार्गतः ।
त्रिसहस्रं च त्रिशतं विंशत्युत्तरमेव च ॥

---

* [ ] एषः पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।

(१) पूर्व्वोक्तेष्वेषु सम्भवं इति लेखितपुस्तकपाठः ।

(२) गत्वा पुण्योदके तथा इति लेखितपुस्तकपाठः ।

एतत् कुर्य्याद्‌विशुद्धात्मा परिषत्सन्निधौ मुदा ।
एतत्पापविशुद्ध्यर्थं प्रायश्चित्तं द्विजन्मनाम् ॥
नाऽन्यथा शुद्धिमाप्नोति जलधेनुप्रतिग्रहात् ।

परिषत्सन्निधौ यथाशास्त्रं पूर्व्ववत् कृत्वा पश्चात् स्नानादिकं कृत्वा पञ्चगव्यं पीत्वा ब्राह्मणान् भोजयेत् ।

इति हेमाद्रौ जलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

अथ क्षीरधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

पुरा षण्मुख क्षीराब्धौ रमा जाता सधेनुका ।
सवत्सा क्षीरसम्पन्ना सर्व्वावयवसुन्दरी ॥
पोषयामास जलधिर्दुग्धधेनुं सवत्सकाम् ।
पुरुषोत्तमाय लक्ष्मीं तां प्रददौ सर्व्वसाक्षिणे ॥
न[1] प्रायच्छत्स तां धेनुं पुत्रीवात्सल्यगौरवात् ।
ययाचे [2]जलधिं धेनुं वृत्रहा पापमोचने ॥

---

(१) स प्रायच्छत् इति क्रीतलेखितपुस्तकपाठः ।
(२) जलधिः इति क्रीतपुस्तकपाठः ।

तथेति प्रददौ सिन्धुर्दुग्धधेनुं स पुण्यिणीम्[1]।
( दापयामास विप्राय ब्रह्महत्याविमोचनीम्। )
तां दुग्धधेनुमादाय पुनः प्रायात् स्वमालयम्॥
धिषणाय स वृत्तान्तं कथयामास देवराट्।
पुण्यकाल उपायाते दुग्धधेनं सुरूपिणीम्॥
दापयामास विप्राय ब्रह्महत्याविमोचने।
तदा प्रभृत्यसौ धेनुर्ब्रह्महत्याविनाशिनी॥
ददाति योनृपो[2] धेनुमर्च्चितां कृष्णचर्म्मणि।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं प्रयाति सः[3]॥
योविप्रः स्वर्च्चितां धेनुं ब्रह्महत्याघमोचनीम्।
रमासहोदरां[4] सिन्धुनिर्म्मितां दुग्धरूपिणीम्॥
प्रतिगृह्णाति वै लोभात् सम्प्राप्ते पुण्यपर्व्वणि।
स कालवशमापन्नस्त्वनुभूय महद्भयम्॥
तदन्ते भुवमासाद्य मृतदारोभवेद्भुवि॥

देवीपुराणे,—

पुण्यकालेषु पुण्यर्क्षे पुण्यतीर्थे जनाधिप!।
योराजा स्वर्च्चितां धेनुं निर्म्मितां दुग्धरूपिणीम्॥

---

(१) ददौ तस्मिन् स्तोत्रवाचकं इति लेखितपुस्तकपाठः।
( ) इदमर्द्धं लेखितपुस्तके नास्ति।
(२) राजा यः प्रददौ इति लेखितपुस्तकपाठः।
(३) अवाप्यते इति क्रोतलेखितपुस्तकपाठः।
(४) तथेति प्रददौ इति लेखितपुस्तकपाठः।

विप्राय वेदविदुषे प्रदद्यात् सोऽपि मुक्तिभाक् ।
[1]ताहृग्दुग्धमयीं धेनुं द्विजोनिष्कारणाद्ददन् ॥
लभते निष्कृतिं[2] नाऽन्यां पञ्चचान्द्रायणादृते ।
ततः शुद्धिमवाप्नोति दुग्धधेनुप्रतिग्रहात् ॥

लिङ्गपुराणे,—

पुण्यकालेषु राजेन्द्र पुण्यतीर्थेषु[3] वा द्विजः ।
दुग्धधेनुं गृहीत्वाऽऽशु वृथाभोगपरायणः ॥
तस्यैव निष्कृतिर्दृष्टा पञ्चभिश्चान्द्रभक्षणैः ।

याधानयागप्राप्तौ न प्रायश्चित्तं पञ्चगव्यप्राशनमेव । तदाह

कूर्म्मपुराणे,—

द्विजो दुग्धमयीं धेनुं प्रतिगृह्य जनाधिपात् ।
यागादिकं प्रकुर्व्वीत पञ्चगव्यं पिबेत्ततः ॥
भक्तला द्रव्यलोभेन मग्नत: पापभीस्तदा ।
पञ्चचान्द्रायणैःशुद्धो[4] नाऽन्यथा तीर्थसेवया ॥

इति हेमाद्रौ क्षीरधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) ताहशीं इति क्रीतलेखितपुस्तकपाठः ।
(२) तस्यैव निष्कृतिर्नास्ति इति क्रीतलेखितपुस्तकपाठः ।
(३) पर्व्वसु इति क्रीतपुस्तकपाठः ।
(४) शुद्धिः इति लेखितपुस्तकपाठः ।

## अथ मधुधेनुप्रतिग्रहप्रायश्चित्तमाह।

स्कान्दपुराणे,—

अथापरं प्रवक्ष्यामि प्रायश्चित्तं विशुद्धये।
मधुधेनुग्रहीतॄणां द्विजानां हितकाम्यया॥
[१]निष्कारणं प्रवृत्तानां गोगीच्छूनां शृणुष्व मे।
पुण्यकालेषु संक्रान्तौ व्यतीपातादिसम्भवे॥
कल्पितां मृण्मयैः पात्रैरर्च्चितां राजवल्लभैः।
मधुधेनुं सवत्साञ्च सर्व्वालङ्कारभूषिताम्॥
गृहीत्वा ब्राह्मणो[२]लोभात् सद्यः पापमवाप्नुयात्।
(ज्वालां तत्र प्रविश्याथ पुनर्भुवमुपागमन्॥
मधुदुधा भवेयुस्ते यदि तन्निष्कृतिर्नचेत्)।
कथञ्चित् निष्कृतिर्दृष्टा तेषां पापपरात्मनाम्॥
पञ्चचान्द्रायणैः शुद्धि र्न चाऽन्यैः शुद्धिरीरिता।

शिवपुराणे,—

चौद्रधेनुः शुद्रजातेर्द्विजैर्न प्रतिगृह्यते।
दैवाद्यदि गृह्णाति[१] पञ्चभिश्चान्द्रभक्षणैः॥

---

(१) निष्कारणे इति वेदितपुस्तक पाठः।

(२) योद्विजः इति क्रीतनेरितपुस्तकपाठः।

(—) अयं श्लोकः क्रीतवाणीपुस्तकयोः न दृष्टः।

(१) वध्यन्ते इति वेषितपुस्तकपाठः।

